॥ प्रमाण लक्षण (माधव) ॥

॥ श्री गुरुभ्यो नमः हरिः ॐ ॥

अशेषगुरुमीशेशं नारायणमनामयम् ।
सम्प्रणम्य प्रवक्ष्यामि प्रमाणानां स्वलक्षणम् ॥ ॥

यथार्थं प्रमाणम् । ।
तद्द्विविधम् । केवलमनुप्रमाणं च । ।
यथार्थज्ञानं केवलम् । ।
तत्साधनमनुप्रमाणम् । ।
केवलं चतुर्विधम् । ईशलक्ष्मीयोग्योगिभेदेन । ।
पूर्वद्वयमनादिनित्यम् । ।
स्वातंत्रपारतंत्राभ्यां तद्विशेषः । पूर्वं
स्वपरगताखिलविशेष विषयम् । द्वितीयं
ईशेऽन्येभ्योऽधिकम् । ।
असार्वत्रिकम् । अन्यत्र सर्वविषयम् । स्पष्टत्वे भेदः । ।
योगिज्ञानं ऋजूनामनादिनित्यम् । ईशे जीवेभ्योऽधिकम् ।
अन्यत्रालोचने सर्वविशयम् । क्रमेण वर्धमानम् ।
आमुक्तेः । ततोऽव्ययम् । ।
ततोऽर्वाक्क्रमेण ह्रसितम् । सादि च तात्त्विकेभ्योऽन्यत्र । ।
अयोगिज्ञानं उत्पत्तिविनाशवत् । अल्पम् । ।
अनुप्रमाणं त्रिविधम् । प्रतक्षमनुमानमागमं इति । ।
निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम् ।
निर्दोषोपपत्तिरनुमानम् । निर्दोषः शब्दः आगमः । ।
अर्थापत्त्युपमे अनुमा विशेषः । ।
अभावोऽनुमाप्रत्यक्षं च । ।
परामर्शापरामर्शविशेषात् । ।
संभवपरिशेषानुमा । ।
आत्मान्योन्याश्रय चक्रकानवस्थाकल्पनागौरव
श्रुतदृष्टहानादयोदूषणानुमा । ।
उपक्रमोपसंहार तदैकरूपाभ्यासापूर्वताफलार्थवादाश्च । ।
उपपत्तिविशेषाः । ।
त एव सोपपत्तयो लिङ्गानि । ।
समाख्या वाक्यप्रकरणस्थानानि च । लिङ्गविशेषाः । ।
व्याप्तिरुपपपत्तिमूलम् । ।
सा प्रतिज्ञाहेतुदृष्टांतरूपा । ।
हेतुगर्भा प्रतिज्ञा केवलाऽपि । ।

सिद्धौ प्रतिज्ञायां हेतुमात्रं च। ।
दृष्टांतः स प्रतिज्ञो हेतुगर्भः। ।
उपपत्तिदोषौ विरोधासङ्गति। ।
न्यूनाधिके वाचनिके। ।
संवादानुक्तियुतास्तु एव निग्रहाः। ।
प्रत्यक्षं सप्तविधम्। साक्षि षडिन्द्रियभेदेन। ।
मानस प्रत्यक्षजा स्मृतिः। ।
स्मृत्यनुवादयोर्नाप्रामाण्यम्। ।
यथार्थत्वानुभवात्। ।
अहानेश्च। ।
विरोधो मानस्ववाक्याभ्याम्। ।
स्ववाक्यविरोधोऽपसिद्धांतजातिरूपेण। ।
जातिर्न मेये मानापेक्षेत्यादिका। ।
मेये मानापेक्षास्तीति च तेनैव न्यायेन सिद्धत्वात्। ।
मानविरोधश्च। ।
छलमसङ्गति। ।
अन्यच्च। ।
अन्यच्च। ।
गृष्टिविवक्षया गामानयेत्युक्ते पृथिवी विवक्षया
गवानयनमशक्यमितिवत्। ।
त्रिविधो विरोधः। प्रतिज्ञाहेतुदृष्टांतभेदेन। ।
प्रमाणविरुद्धार्थप्रतिज्ञा प्रतिज्ञाविरोधः। ।
हेतुस्वरूपासिद्धिरव्याप्तिश्चेति हेतुविरोधः। ।
साध्यस्य साधनस्य वाऽननुगमो दृष्टांत विरोधः। ।
प्रतिज्ञायाः समबलविरोध एव सप्रतिसाधनः। ।
स एवोपाधि दोषोऽपि। ।
सर्व एते दृश्यत्वानुमाने दृष्टव्याः। ।
प्रत्यक्षागमादिभिर्जगतः सत्यत्वात्। ।
तत्पक्षे दृश्यत्वस्य च मिथ्यात्वात्। ।
अनिर्वचनीयस्य प्रतिवादिनोऽसिद्धत्वात्। ।
अनिर्वचनीयस्येति। ।
आत्मनोऽपि दृश्यत्वात्। ।
शुक्तिरजतादेरनिर्वचनीयत्वाभावात्। ।
अनिर्वचनीय दृश्यत्वाभावात्। ।
मानसिद्धत्वादिति सप्रतिसाधनत्वात्। ।
जगत्सत्यत्वग्राहि प्रत्यक्षस्य वर्तमानमात्रग्राहित्वे
अनुमानागमप्रामाण्य ग्राहिणोऽपि प्रत्यक्षत्वाविशेषादुत्तरक्षणे
प्रामाण्यं न सेत्स्यतीति भेदादिवाक्यानामेव प्रामाण्यं स्यात्। ।

तस्य साक्षिसिद्धत्वं चेज्जगत्सत्यत्वमपि साक्षिसिद्धम् । ।
व्यभिचारिश्चेदागमार्थानुमानिर्दोषत्वाध्यवसाये च समः । ।
अत उत्तरदिवसेऽभेदवाक्यस्य भेदोऽर्थः स्यात् । ।
निर्दोषानुमायाः सदोषत्वम् । ।
सदोषानुमायाः निर्दोषत्वम् । ।
इत्यव्यवस्था । ।
आश्रयसाध्यवधिकरणासिद्धयो न दूषणम् । ।
अतिप्रसङ्गाभावात् । ।
अतिप्रसङ्गेन हि दोषत्वादोषत्वे कल्प्ये । ।
व्याप्तिरेव हि प्रयोजिका । ।
असत्यपि व्याप्तिरस्त्येव । ।
असदाश्रयस्य साधकत्वं नेत्यपि व्याप्तिं विना
कथं निवार्यते । ।
असदाश्रयमित्यादि विशेषणत्वसंभवे कथमव्याप्तिः । ।
न चात्यंताभावोऽपि सर्वधर्मरहितः । प्रमेयत्वाद्यनुभवात् । ।
परिशेषार्थापत्तिप्रामाण्याभ्युपगमाच्च । ।
विमतं सकर्तृकमित्यत्र सर्वज्ञत्वस्य पक्षधर्मता बलेन
सिद्ध्यङ्गीकारात् । ।
परिशेषोऽर्थापत्तिरनुमानमित्यविशेषः । उपपत्तिमात्रत्वात् । ।
उपपत्तेश्च व्याप्त्यपेक्षा सर्वथाङ्गीकार्येत्याग्रह मात्रेण भेदः । ।
उपमानस्यापि व्याप्तिरूपत्वात् । ।
न हि स्वसदृशेनासदृशं क्वचिद्दृष्टम् । ।
योग्यानुपलब्धेश्च लिङ्गत्वम् । ।
अविशेषात् । ।
अविशेषात् । ।
अविशेषात् । ।
अविशेषात् । ।
उक्तदोषेष्वेवाशेषानुमानदोषाणामंतर्भावः । ।
साध्याविशिष्टोऽसिद्धिः । ।
सिद्धसाधकोऽसङ्गतिः । ।
न प्रमासाधनं प्रमाणम् । ।
ज्ञानव्यतिरिक्तप्रमायां प्रमाणाभावात् । ।
न चाज्ञातपरिच्छित्तिरेव प्रमेत्यत्र किञ्चिन्मानम् । ।
याथार्थ्यमेव प्रामाण्यमित्यङ्गीकारात् । ।
न चानुभूतिरेव प्रमाणम् । स्मृत्यादावव्याप्तेः । ।
वेदानुमानादि प्रामाण्यप्रसिद्धेश्च । ।
स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम् ।
प्रमाणमिति विज्ञेयं धर्माद्यर्थे बुभूषुभिः ॥

इति श्रुतेश्च । ।
ऐतिह्यमागमभेदः । ।
न च सम्यगनुभवसाधनं प्रमाणम् । ईश्वरज्ञानादावव्याप्तेः । ।
अप्रामाण्ये प्रमाणाभावच्च । ।
प्रामाण्यज्ञाने च । ।
तत्राप्यङ्गीकारेऽनवस्थितेः । ।
स्वप्रकाशात्माङ्गीकारे तत्राव्याप्तेः । ।
स्मृतेश्च प्रामाण्यानङ्गीकारेऽनुभूतं मयेत्यत्र प्रमाणाभावात् । ।
लिङ्गत्वेन प्रामाण्ये कल्पनागौरवम् । ।
दृष्टहानिश्च । ।
स्मृतिप्रमाणद्वैविध्यमात्रकल्पने मिथ्याज्ञानादेर्निरासादनुभव
विरोधः । ।
तदनुभवाभाव इत्युक्तेऽनुभवः स्मृतिश्च नास्तीत्युक्ते
किमुत्तरम् । ।
स्वसिद्धैः साधनं परसिद्धैर्दूषणम् । ।
अतो न दूषणे अपसिद्धांतादि । ।
इष्टापत्तिः सिद्धसाधनत्वादसङ्गतमेव । ।
आनंदतीर्थमुनिना ब्रह्मतर्कोक्तमार्गतः ।
मानलक्षणमित्युक्तं सङ्क्षेपाद्ब्रह्मसिद्धये ॥ ॥

अशेषमानमेयैक साक्षिणेऽक्षयमूर्तये ।
अजेश पुरुहूतेड्य नमो नारायणाय ते ॥ ॥

इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं
प्रमाणलक्षनग्रन्थोत्तमं सम्पूर्णम्
॥ भारतीरमणमुख्यप्राणांतर्गत श्रीकृष्णार्पणमस्तु ॥